Vol. XII

No. 2



# BULLETIN OF THE GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY MADRAS

EDITED BY

T. CHANDRASEKHARAN, M.A., L.T.,

*Curator, Government Oriental Manuscripts Library, Madras.*

1959

## TABLE OF CONTENTS

# CHANDAH KAUSTUBHA

BY

## RADHADAMODARA

(with the commentary of Vidyābhūṣaṇa)

Edited by

T. CHANDRASEKHARAN, M.A., L.T.,

AND

T. A. K. VENKATACHARIAR

॥ श्रीः ॥

## ॥ छन्दःकौस्तुभः ॥

॥ राधादामोदरविरचितः ॥

॥ श्रीविद्याभूषणविरचित - भाष्यसहितः ॥

(Continued From Page 19 Vol. XII No. I.)

### ॥ अथाष्टमी प्रभा ॥

अथोक्तानां छन्दसां [1]प्रत्ययार्थं प्रस्तारादिकं दर्शनीयम् । अतस्तदुद्दिशति— प्रस्तारेति—

प्रस्तारोद्दिष्टनष्टानि तथा मेरुपताकिके ।
मर्कटी चेति षट् प्राहुः [2]प्रत्ययान् वर्णमात्रयोः ॥ १ ॥

तत्र वर्णच्छन्दसां प्राथमिकत्वात्तेषां [3]तत् पूर्वं वाच्यमिति व्यञ्जयति— **वर्णमात्रयोरिति** ॥ १ ॥

सर्वगुर्वादिमं वृत्तं सर्वलघ्वन्तिमं भवेत् ॥ २ ॥

---

1. भेदवर्णमात्रागुरुलघुसंख्यादिज्ञानार्थम् ।
2. प्रतीयन्ते संख्यादिकमेभिरिति प्रत्ययाः प्रस्तारादयः । तान् प्रत्ययान् ।
3. प्रस्तारादि ।

जातीनां प्रस्तारेषु प्रथमं छन्दः सर्वगुरुवर्णं दृष्टम्, अन्तिमं तु सर्वलघुवर्णमित्याह—**सर्वेति** ॥ २ ॥

तत्र वर्णप्रस्तारलक्षणमाह—

तत्र वर्णप्रस्तार :—

पादे सर्वगुरौ गुरोः प्रथमतः कुर्यादधस्ताल्लघुं
शेषं तूर्ध्वसमानकं विरचयेदूने गुरूनर्पयेत् ।
पादः सर्वलघुर्न यावदुदियात्तावद्विदध्यादिदं
प्रस्तारः खलु वर्णवृत्तनिपुणैरेष स्मृतः पण्डितैः ॥ ३ ॥

अर्धमर्धसमे पादे विषमे कृत्स्नमेव सः ।

**पाद इति** । आदौ सर्वगुरुः पादः स्थाप्यः, "सर्वगुर्वादिमं वृत्त"मित्युक्तेः । यस्मिन् सर्वगुरौ पादे स्थापिते सति तत्प्रथमस्य गुरोरधस्तात् लघुं कुर्यात् (विलेत्) [विलिखेत्] । शेषं सर्वमूर्ध्वसमानकं विरचयेत् । उपरिष्टात् ये वर्णा गुरुरूपाः गुरुलघुरूपा वा स्युः, ते सर्वे यथावत्तदधो लेख्या इत्यर्थः । इमं विधिं पुनः पुनः कुर्यात् । तत्र द्वितीयतृतीयादिके कृत्ये क्रियमाणे सति ऊर्ध्वस्थि(राद्या)[ताद्य] गुरोरधस्ताल्लघु[:]लेख्यः । शेषं तु सर्वमूर्ध्वगतवत् कुर्यात् । अथ गुर्वधो लिखितात् लघोः पूर्वमूने स्थाने गुरूनर्पयेत् विलिखेत् । इति (व्यक्तापेक्ष्यं) [व्यक्त्यपेक्षं] बहुवचनं, गुरुं, गुरू, गुरूनेत्यर्थः । इदं कृत्यं तावद्विदध्यात् कुर्यात्, यावत्स सर्वगुरुः पादः सर्वलघुः सन्ननूदियात दृश्येतेत्यर्थः ॥

एकवर्णप्रस्तारः ॥

ऽ १, । २,

द्विवर्णप्रस्तारः ॥

ऽऽ १, ।ऽ २, ऽ। ३, ।। ४,

त्रिवर्णप्रस्तारः ॥

ऽऽऽ १, ।ऽऽ २, ऽ।ऽ ३,
।।ऽ ४, ऽऽ। ५, ।ऽ। ६,
ऽ।। ७, ।।। ८,

चतुर्वर्णप्रस्तारः ॥

| | | | |
|---|---|---|---|
| ऽऽऽऽ | १ | ऽऽऽ। | ९ |
| ।ऽऽऽ | २ | ।ऽऽ। | १० |
| ऽ।ऽऽ | ३ | ऽ।ऽ। | ११ |
| ।।ऽऽ | ४ | ।।ऽ। | १२ |
| ऽऽ।ऽ | ५ | ऽऽ।। | १३ |
| ।ऽ।ऽ | ६ | ।ऽ।। | १४ |
| ऽ।।ऽ | ७ | ऽ।।। | १५ |
| ।।।ऽ | ८ | ।।।। | १६ |

एष खलु वर्णवृत्तनिपुणैः पण्डितैः प्रस्तारः स्मृतः । वर्णप्रस्तारोऽयमित्यर्थः । प्रस्तारो विस्तार इत्यर्थः । एषा समवृत्तानां प्रस्तारकल्पना । अर्धसमवृत्तानां तु अर्धस्य पादकल्पना कार्या । शेषं पूर्ववत् । यदुक्तं—“अर्धसमस्य प्रस्तारेऽर्धं प्रस्तारः कार्यं” इति । विषमाणां तु प्रस्तारे पादचतुष्टयात्मकस्य[छन्दसः] पादकल्पना कार्या । ‘यदुक्तं विषमप्रस्तारे पादचतुष्टयस्य प्रस्तारः कार्यं’ इति । इत्थं त्रिविधानां छन्दसां प्रस्तारो बोध्यः ॥ ३ ॥

अथ प्रस्तारोपयोगि उद्दिष्टमाह—

अथ वर्णोद्दिष्टम्—

वृत्तवर्णशिरस्यङ्कान् विलिख्य द्विगुणक्रमात् ॥ ४ ॥

एकं संयोज्य लघ्वङ्कैः सहोद्दिष्टं विभावयेत् ।
स्वरूपं वीक्ष्य वृत्तस्य तत्संख्याधीरितः फलम् ॥ ५ ॥

**वृत्तवर्णेति ।** वृत्तस्य परिदृश्यमानस्य छन्दसो ये लघुगुरुरूपा वर्णास्तेषां शिरसि प्रथमात् द्विगुणक्रमात् अङ्कान् विलिख्य स्थानद्विगुणानङ्कान् विन्यस्येत्यर्थः । तेषु ये लघ्वङ्का लघुवर्णशिरस्था अङ्काः तै(रङ्क)[रेक]मङ्कं संयोज्य मिश्रितं कृत्वा उद्दिष्टं विभावयेत् । किंसंख्याकमिदं छन्द इति विचिन्तयेदित्यर्थः । यथा त्र्यक्षरे छन्दसि प्रथमं गुरुद्वयं तत एकं लघु ईदृक् वृत्तं वीक्ष्य प्रथमेऽक्षरे एककः द्वितीये द्विकः तृतीये चतुष्कः स एकेन मिश्रितः पञ्चमं वृत्तमिदमिति ज्ञापयति । यथा चतुरक्षरे छन्दसि प्रथमं गुरुद्वयं ततो लघुस्ततो गुरुः ऽऽ।ऽ ईदृक् वृत्तं वीक्ष्य प्रथमे एककः द्वितीये द्विकः तृतीये चतुष्कः चतुर्थे त्वष्टकोऽङ्को लेख्यः । चतुरङ्क एकेन युक्तः पञ्चमं वृत्तमिदमिति ज्ञापयति इत्युद्दिष्टविधिः । उद्दिष्टफलमाह—**स्वरूपमिति ।** वृत्तस्य रूपं दृष्ट्वा तत्संख्याज्ञानं तत्फलम् ॥ ५ ॥

अथ तदुपयोगि नष्टमाह—

अथ वर्णनष्टम्—

नष्टाङ्के भागमापूर्तेः कुर्यादर्धं समे लघुः ।
विषमे त्वेकमाधाय विभक्तव्ये गुरुर्भवेत् ।
ततो नष्टस्य वृत्तस्य स्वरूपमवबुध्यते ॥ ६ ॥

**नष्टाङ्क इति ।** त्र्यक्षरादिप्रस्तारे पञ्चमं षष्ठमन्यद्वा नष्टं किञ्चिच्छन्दः । ततः कीदृक् भवेदिति पृष्टे नष्टस्यादृश्यमानस्य वृत्तस्य संख्याङ्के यावद्वृत्तवर्णपूर्ति विभागं कुर्यात् अर्धं यथा स्यात्तथेत्य[न]यायातं विभज्य गुरुलघुरूपान् वर्णान् विलिखेत्ततो वृत्तस्वरूपं व्यक्तीभवेत् । तद्विभागो द्वेधेत्याह—**सम इति ।** विभक्तव्ये नष्टसंख्याके समे सति तं विभज्य लघुर्लेख्यः । विषमे सति तद्विभागासम्भवात्तत्रैकं निक्षिपेत् । सैके तस्मिन् विभक्तव्ये गुरुर्लेख्यः । समाङ्कविभागे लघुः विषमाङ्कविभागे तु गुरुरिति भावः । यथा त्र्यक्षरप्रस्तारे नष्टं पञ्चमं छन्दः कीदृगिति पृष्टे पञ्चानां वैषम्येण विभागासंभवात्तत्रैकं निक्षिपेत् । जाताः षट् । तेषां विभागे गुरुः । अथ च त्रयाणां वैषम्येण विभागासंभवात् तत्रै(का)[कं] निक्षिपेत् । जाताश्चत्वारः । तेषां विभागे गुरुः । द्वयोः साम्यात् तद्विभागे लघुरिति वृत्तवर्णानामागतत्वात् अतः परं न विभाग इति, त्र्यक्षरे पञ्चमो भेदो गुरुद्वयैक[लघुः] व्यक्ती भवति ऽऽ।, यथा चतुरक्षरे षष्ठं वृत्तं नष्टं कीदृ(शी)[गि]ति पृष्टे षण्णां साम्यात्तद्विभागे लघुः त्रयाणां वैषम्यात् तत्रैकं निक्षिपेत् । तेषां विभागे गुरुः । द्वयोः साम्यात्तद्विभागे लघुः । एकस्य विभागासंभवात् तत्रैकं निक्षिपेत् । जातौ द्वौ तयोर्विभागे गुरुरिति लघुगुरुलघुगुरुरूपश्चतुरक्षरे षष्ठो भेदः । नष्टफलमाह—**तत इति ।** ततः समविषमनष्टाङ्कविभाग(त)[तो]लघुगुरुवर्णोपादानादित्यर्थः । वृत्तसङ्ख्यया वृत्तस्वरूपज्ञानं नष्टफलमित्यर्थः ॥ ६ ॥

अथ वर्णमेरुमाह—

अथ वर्णमेरुः—

कोष्ठान् कृत्वैकैकवृद्धान् द्विमुख्यान्
आद्यानन्त्यांश्चैकयुक्तान् विदध्यात् ।
मूर्धाङ्काभ्यां मध्यमान् संनियु(ज्या)[ञ्ज्या]त्
एष प्रोक्तो वर्णमेरुः कवीन्द्रैः ॥ ७ ॥

सर्वगुर्वादयो ये स्युर्भेदाः प्रस्तृतजातिषु ।
तत्संख्या वृत्तसंख्या च ज्ञायते वर्णमेरुणा ॥ ८ ॥

**कोष्ठानिति ।** द्वौ कोष्ठौ मुख्यावादिमौ येषां तानेकैकवृद्धान् कोष्ठान् कृत्वा । अयमर्थः एकाक्षरादिषु षड्विंशत्यक्षरान्तेषु प्रस्तृतेषु कति भेदाः सर्वगुरवः कत्येकादिलघवः एकादिगुरवो वा कति सर्वलघवः कति वर्णाः का वा प्रस्तारसङ्ख्येति (प्रस्तेमेरुणोतरापत्यस्य) [ प्रश्ने मेरुणोत्तरमित्यस्य ] प्रवृत्तिः । तत्रैकाक्षरादिक्रमेण यावदिष्टं पङ्क्तिकोष्ठान् कृत्वा तेषु प्रथमादिक्रमेण द्वि(प्र)[त्रि]मुख्यानेकैकवृद्धान् कोष्ठान् विदध्यात् । तत्र प्रथमे पङ्क्तिकोष्ठे कोष्ठद्वयं द्वितीयकोष्ठे त्रयं, तृतीये कोष्ठे चतुष्टयं इत्येवमग्रिमेषु बोध्यम् । एवंनिर्मितेषु कोष्ठेष्वाद्यानन्त्यांश्च कोष्ठाने-काङ्कयुतान् कुर्यात् । मध्यमान् कोष्ठांस्तु मूर्धकोष्ठद्वयाङ्कावेकीकृत्य तेन संनियुञ्ज्यात् पूरयेत् । एष वर्णमेरुः कवीन्द्रैरुक्तः । अस्य फलमाह—**सर्वगुर्विति ।** प्रस्तृतायां जातौ सर्वगुर्वेकादिलघुसर्वलघुरूपा ये भेदाः सन्ति, तेषां सङ्ख्या मेरुणा ज्ञायते, मेरुपङ्क्तिकोष्ठस्थैरुत्तरोत्तरैरङ्कैः पूर्वपूर्वस्त्वेकादिगु(रु)[रू]णामिति बोध्यम् । वृत्तसङ्ख्या तु पङ्क्तिस्था कोष्ठाङ्कयोगेन ज्ञायत इति । यथैकाक्षरप्रस्तार आदावेक-गुरुरन्ते त्वेकलघुः, सङ्ख्या द्विकम्, द्व्यक्षरे त्वादौ सर्वगुरुः, स्थानद्वये एकलघुः, अन्ते सर्वलघुः, सङ्ख्या चतुष्कम्, त्र्यक्षरे त्वादौ सर्वगुरुः, स्थानत्रये एकलघुः, स्थानत्रये द्विलघुः, अन्ते सर्वलघुः, सङ्ख्या त्वष्टकम्, चतुरक्षरे त्वादौ सर्वगुरुः चतुर्गुरुरन्यत्राभावात्, स्थानचतुष्के त्रिगुरुः, स्थानषट्के द्विगुरुः, स्थानचतुष्के एकगुरुः, अन्ते सर्वलघुः, सङ्ख्या तु षोड[श]कमिति ॥ ८ ॥

मेरौ चतुर्वर्णप्रस्तारस्य षोडश भेदाः सन्ति । तत्रैकः सर्वगुरुः, चत्वारस्त्रिगुरवः, षट् द्विगुरवः, चत्वार एकगुरवः, एकः सर्वलघुरिति । एवं षोडशभेदवति तस्मिन् प्रस्तारे कतमस्थाने सर्वगुरुः, कतमस्थाने त्रिगुरुः, कतमस्थाने द्विगुरुः, कतमस्थाने एकगुरुः, कतमस्थाने सर्वलघुः, का वा प्रस्तारसङ्ख्येति प्रश्ने पताकयोत्तरं देयमिति, तदर्थं पताकामाह ।

अथ वर्णपताका—

कृत्वा तावद्भुवि रम्यां पताकां तस्यामुद्दिष्ट १२४८ वदङ्कान्विदध्यात् ।
पूर्वाङ्केनापूरयन्नुत्तराङ्कं पुच्छे तस्या निक्षिपेत्तं तु वृद्धम् ॥ ९ ॥

कुर्यादेवं (त्प)[तत्प्र]वृत्ताधिकाङ्को यावत् प्रस्तारप्रभेदा भवन्ति ।
एतां ब्रूते वर्णनिष्ठां पताकां सुज्ञैर्गम्यां पिङ्गलो नागराजः ॥ १० ॥

**कृत्वेति ।** भुवि रम्यां पताकां कृत्वा लिखित्वा तस्यां वर्णोद्दिष्टवत् अङ्कान्निदध्यात् अर्पयेत् । यथा चतुर्वर्णप्रस्तारे १,२,४,८, एकद्विचतुरष्टाङ्का वृत्तवर्णशिरसि भवन्ति तथा पता(कां)[का]वंशदण्डे ते ते लेख्या इत्यर्थः । अथ तस्या(तंक)[स्तमङ्कं] परं परमङ्कं पूर्वपूर्वाङ्केन[आपूरयन्]तं परं परमङ्कं वृद्धं सन्तं तस्या [:पुच्छेनि] क्षिपेदधोधः स्थापयेत् (पादाभवेति)[यावत्प्रस्तारप्रभेदा भवन्ति] पूर्यन्ते । तावदेवं कु[र्यात्]पताकाङ्का वर्धनीयाः ॥ १० ॥

पताकाफलमाह—

सर्वगुर्वादियो भेदा मेरौ ये परिदर्शिताः ।
तेषां स्थानानि बोध्यन्ते विना[न्वे]षा[त्]पताकया ॥ ११ ॥

**सर्वेति ।** पताकाङ्कदर्शनादेव सर्वगुर्वादिभेदानां स्थानानि ज्ञायन्त इत्यर्थः । तथा हि यथा चतुर्वर्णप्रस्तारे १,२,४,८, एकद्विचतुरष्टाङ्का देयाः । अत्रैकाङ्कस्य पूर्वाङ्काभावात् द्वितीयाङ्कमारभ्य पङ्क्तिः पूर्यते । तत्र पूर्वाङ्क एकाङ्क एव । तस्मादुत्तरात् द्वितीयादयः ते चाव्यवहित[ाङ्केना] पूर्याः । तथा हि एकद्वियोगे त्र्यङ्कः ३ स द्वितीयाधः स्थाप्यः । एकचतुर्योगे पञ्चमाङ्कः ५ त्र्यङ्काधः । एकाष्टयोगे नवाङ्कः ९ पञ्चमाधः । ततः पङ्क्तिपरित्यागः । मेरौ त्रिगुरूणां रूपाणां चतुःसङ्ख्यादर्शनात् । अथ चतुरङ्कस्याधः पूरितपङ्क्तिस्था अङ्का उत्तराङ्कमिलिता देयाः । तत्र प्रथमः पूरित एवेति त्यज्यते । द्विचतुर्योगे षडङ्कः ६ चतुरङ्काधः स्थाप्यः । त्रिचतुर्योगे सप्ताङ्कः ७ षडङ्काधः । पञ्चचतुर्योगादागतो नवाङ्को न स्थाप्यः वृत्तत्वात् । नवचतुर्योगे त्रयोदशाङ्कः १३ सप्ताङ्काधः, द्व्यष्टयोगे दशाङ्कस्त्रयोदशाङ्काधः त्र्यष्टयोगादेकादशाङ्को ११ दशाङ्काधः । पञ्चाष्टयोगे त्रयोदशाङ्को वृत्त एव । तत्र पङ्क्तित्यागः । मेरुसङ्ख्यापरिमाणोक्तेः । अथ चतुरष्टयोगे द्वादशाङ्कः १२ अष्टाङ्काधः स्थाप्यः । षडष्टयोगे चतुर्दशाङ्कः १४ द्वादशाङ्काधः सप्ताष्टयोगे पञ्चदशाङ्कः १५ चतुर्दशाङ्काधः, त्रयोदशाष्टयोगेन नाग्रेऽङ्कसंचारः प्रस्तारभेदाधिक्यापत्तेः । अष्टाङ्काग्रे षोडशाङ्कस्तु सर्वलघुज्ञापनायेति संप्रदायः । तथा चतुर्वर्णप्रस्तारे प्रथमो भेदः सर्वगुरुः । द्वित्रिपञ्चनवस्थानभेदाः त्रिगुरवः, चतुःषष्ठसप्तदशैकादशत्रयोदशस्थानस्था द्विगुरवः, अष्टद्वादशचतुर्दशपञ्चदशस्थानस्था एकगुरवः, षोडशस्थानस्थस्तु सर्वलघुः । प्रस्तारसङ्ख्या तु

षोडशैवेति सर्वान्त्याङ्का(दृश)[दव]गतम् । अनया दिशा षड्विंशतिवर्णपर्यन्तं पताकारचनं विज्ञैर्बोध्यम् ।। ११ ।।

मेरावुक्थादीनि षड्विंशतिच्छन्दांसि सन्ति । तानि किंसङ्ख्याकानीति अथोक्थादिच्छन्दसां प्रत्येकं भेदाः कति भवन्ति, तत्प्रभेदानामक्षराणि कति, तेष्वक्षरेषु कति गुरूणि कति लघूनि भवन्ति, तत्प्रभेदानां मात्राः कति इति प्रश्नस्य मर्कट्योत्तरं देयमिति, तदर्थं वर्णमर्कटीं दर्शयति—

अथ वर्णमर्कटी ।।

रचयित्वा षट् पङ्क्तीः कोष्ठानपि च वर्णसङ्ख्याकान् ।
तासां भर पूर्वामेकाद्यैर्द्व्याद्यैर्द्विगुणैर्द्वितीयां च ।। १२ ।।

**रचयित्वेति ।** हे सखे मर्कटीं निर्मिमाणस्त्वं षट् पङ्क्तीः कृत्वा तासां पङ्क्तीनां वर्णसङ्ख्याकान् कोष्ठान् कृत्वा षड्विंशतिवर्णपर्यन्तानां उक्थादिवर्णच्छन्दस्तद्भेदादिषट्कसङ्ख्यां ज्ञातुकामस्त्वं तासु षट्सु पङ्क्तिषु तत्पर्यन्तानां वर्णानां यावदिष्टं कोष्ठकान् निर्मायेत्यर्थः । पूर्वां प्रथमां पङ्क्तिमेकाद्यैरेकद्वित्र्यादिभिरङ्कैः भर पूरय । द्व्यादिभिर्द्विगुणितैरङ्कैः द्वितीयां च पङ्क्तिं भर । प्रथमः कोष्ठो द्व्यङ्केन द्वितीयश्चतुरङ्केन तृतीयोऽष्टाङ्केन पूरणीयः । एवमग्रेऽपीत्यर्थः ।। १२ ।।

प्रथमादिकयोरुभयोर्गुणितैरङ्कैस्तृतीयां च ।
अत्र तृतीयाङ्कार्धैस्तुर्यामथ पञ्चमीं चापि ।।

पञ्चम्यङ्कैस्त्रिगुणैः षष्ठीमपि वर्णमर्कटी ह्येषा ।। १३ ।।

उभयोः प्रथमादिकयोः प्रथमद्वितीयपङ्क्त्योरङ्कैर्गुणितैः तृतीयां च पङ्क्तिं भर । प्रथमे कोष्ठे द्व्यङ्केन द्वितीयेऽष्टाङ्केन तृतीये चतुर्विंशत्यङ्केन चतुर्थे चतुष्षष्ट्यङ्केनेत्येवमादिरीत्या तृतीयां पूरयेत्यर्थः । तृतीयपङ्क्तिमेवं पूरयित्वा तस्यास्तृतीयपङ्क्तेरङ्का(द्यै) [र्धै]श्चतुर्थीं पञ्चमीं च पङ्क्तिं भर । अथ त्रिगुणितैः पञ्चम्यङ्कैः षष्ठीं च पङ्क्तिं भरेत्यर्थः । एषा हि ईदृग्लक्षणा मर्कटी भवेत् ।। १३ ।।

| | | | | | | |
|---|---|---|---|---|---|---|
| छन्दः | १ | २ | ३ | ४ | ५ | ६ |
| प्रभेदः | २ | ४ | ८ | १६ | ३२ | ६४ |
| वर्णाः | २ | ८ | २४ | ६४ | १६० | ३८४ |
| गुरु | १ | ४ | १२ | ३२ | ८० | १९२ |
| लघु | १ | ४ | १२ | ३२ | ८० | १९२ |
| मात्राः | ३ | १२ | ३६ | ९६ | २४० | ५७६ |

मर्कटीज्ञानफलमाह—

छन्दस्तद्भेदाक्षरगुरुलघुकलिकाप्रसङ्ख्यात्री ॥ १४ ॥

**॥ इति छन्दःकौस्तुभे वर्णप्रस्तारोऽष्टमी प्रभा ॥**

**छन्द इति ।** तत्र प्रथमया पङ्क्त्या छन्दस्सङ्ख्या, द्वितीयया तद्भेदसङ्ख्या, तृतीयया तदक्षरसङ्ख्या चतुर्थ्या गुर्वक्षरसङ्ख्या पञ्चम्या लघ्वक्षरसंख्या, ष(ष्ठी)[ष्ठ्या] तु कला ज्ञायत इत्यर्थः । यथैकाक्षरमुक्थाछन्दः प्रथमं भवति । तस्य द्वौ भेदौ । तस्य द्विभेदस्य द्वे अक्षरे । तयोरेकं गुरावेकं लघौ कलास्तु तिस्रो भवन्ति इति षड्भिः कोष्ठैः क्रमादमी षट् प्रत्ययाः प्रजायन्ते । यथा वा द्व्यक्षरमत्युक्थाछन्दो द्वितीयं भवति तस्य चत्वारो भेदाः चतुर्भेदस्याष्टौ वर्णाः तेषु चत्वारो गुरवश्चत्वारो लघवः कलास्तु द्वादशेति । एवं मध्या(द्विषुवो)[दिषु बोध्यम्] ॥ १४ ॥

**इति श्रीविद्याभूषणविरचिते छन्दःकौस्तुभभाष्ये**
**वर्णप्रस्तारादिनिरूपणं नामाष्टमी प्रभा ॥ ८ ॥**

—: * :—

**॥ अथ नवमी प्रभा ॥**

अथ मात्रावृत्तानां प्रस्तारदिकं वक्तुकामस्तेषामादौ पादमात्रासंख्यामाह—

अत्र द्वित्रिचतुःपञ्चषट्कादीनां विनिर्ममे ।

प्रस्तारं खलु मात्राणां पादानां नागनायकः ॥
तद्भेदा द्वित्रिपञ्चाष्टत्रयोदशमुखक्रमात् ॥ १ ॥

द्विकलप्रस्तारः। त्रिकलप्रस्तारः। चतुष्कलप्रस्तारः। पञ्चकलप्रस्तारः। षट्कलप्रस्तारः।

**अत्रेति**। यथा वर्णवृत्तानामेकवर्णात् पादादार(भा)[भ्य]वृत्तान्यभवन् तथात्र मात्रावृत्तानामेकमात्रात्पादादार(भा)[भ्य]वृत्तानि भवेयुरित्याह—द्वित्रीत्यादि। द्विमात्र स्त्रिमात्रश्चतुर्मात्रः पञ्चमात्रः षण्मात्रश्च। आदिना सप्तमात्रादयो गृह्यन्ते। एकमात्रस्येह प्रस्तारस्यैवाभावात्तं विहाय द्विमात्रादीनामुपादानम्। द्वित्रिचतुरिति। तेषां द्विमात्रादीनां पादानां भेदादयो भवन्तीत्यर्थः। ननु प्रस्तारे सत्येषां कति भेदाः स्युरिति चेत्तत्राह—तद्भेदा इति। तत्र द्विमात्रो(द्वि)[द्विभे]दः,, त्रिमात्रस्त्रिभेदः, चतुर्मात्रः पञ्चभेदः पञ्चमात्रो ऽष्टभेदः, षण्मात्र(द्व)[स्त्र]योदशभेद इत्यर्थः। तत्रैककलपादस्योदाहरणं यथा-मधु पिब। द्विकलपादस्य यथा—कृष्णः पायात्। यथा वा-भरतिमय गवति(?) ॥ १ ॥

अथ मात्राप्रस्तारं लक्षयितुकामः पादस्थापनां दर्शयति—

विषमकलो लघुपूर्वः सर्वगुरुः समकलो भवेत्पादः ॥ २ ॥

तत्र मात्राप्रस्तारः—

दत्वाधः प्रथमगुरोर्लघुं विदध्यात्<br>
ऊर्ध्वस्थैः किल सदृशानि शेषकाणि।<br>
ऊने स्याद्गुरु लघु वैष मात्रिकाणां<br>
प्रस्तारः सकललघुर्न यावदङ्घ्रि[:] ॥ ३ ॥

**विषमेति**। अत्र पादस्थापना द्वेधा भवति। समक(ल्प)[ल]स्य पादस्य सर्वे गुरवः स्युः विषमकलस्य तु एको लघुस्ततो गुरव इति। यथा द्विकलचतुष्कलषट्कलादेः पादस्य सर्वगुरुतया स्थापनं, त्रिकलपञ्चकलसप्तकलादेस्त्वेको लघुस्ततो गुरव इति। ततः प्रस्तारप्रवृत्तिः—**दत्वेति**। प्रथमस्य गुरोरधस्तात् लघुं दत्वा लिखित्वा ततः शेषकाणि ऊर्ध्वस्थैः सदृशानि विदध्यात् विलिखेत्। शेषा मात्रा ऊर्ध्वस्थवल्लेख्या इत्यर्थः। अथ प्रथमगुर्वधोलिखिताल्लघोः पूर्वमूने स्थाने गुरुः स्यात् लघुर्वा स्यादिति ऊनस्य स्थानस्य गुरुणा पूर्तौ गुरु लेख्यं, लघुना पूर्तौ तत्

लेख्यमित्यर्थः । द्वि[1]कलप्रस्तारः त्रिकलप्रस्तारः चतुष्कलप्रस्तारः पञ्चकलप्रस्तारः षट्कलप्रस्तारः । यथा पञ्चकलप्रस्तारेऽष्टौ भेदा भवन्ति। तेषु द्वितीयस्य भेदस्य ऊनं स्थानं गुरुणा पूर्यते, तृतीयस्योनं तु लघुनेति । यथा च षट्कलस्य पादस्य प्रस्तारे त्रयोदश भेदा भवन्ति । तत्र नवमभेदस्योनं गुरुभ्यां पूर्यते । एकादशस्योनं तु गुरुलघुभ्यां पूर्यते । एवं सप्तकलादिपादप्रस्तारभेदेषु । ....तु क्वचिद्गुरुभ्यां लघुना गुरु(भि)[भिः]लघुना ।अतो न स्थानपूर्तिर्मृग्या । **सकल लघुरिति** । यावदङ्घ्रि[ः]पाद[ः]सर्वलघुर्न भवेत् तावदेवं कुर्यादित्यर्थः । यथा चैवं [वर्ण]वृत्तप्रस्तारे सर्वे भेदाः समवर्णास्तथा मात्रावृत्तप्रस्तारे सर्वभेदाः सममात्रा भवन्तीत्यवधेयम् ॥ ३ ॥

**अथ मात्रोद्दिष्टं लक्षयति—**

अथ मात्रोद्दिष्टम्—

अङ्कं पूर्वाङ्कयुतं दत्वा शीर्षणि लघोरधश्च गुरोः ।
लोपितगुरुशीर्षाङ्कात् मात्रोद्दिष्टं विबोध्यमन्त्याङ्कात् ॥ ४ ॥

**अङ्कमिति** । लघोः शीर्षणि पूर्वाङ्कयुतमङ्कं दत्वा गुरोस्तु शीर्षण्यधश्च तं दत्वा अन्त्याङ्कादुद्दिष्टं बोध्यम् । कीदृशादन्त्याङ्कात् लोपितगुरुशीर्षाङ्कात् विलुप्तो गुरु-शीर्षाङ्को यस्मात्स तथा तादृशादित्यर्थः । अत्र पूर्वाङ्कयुक्तस्य अङ्कस्य प्रदानं द्वेधा, लघोरुपर्येवाङ्कप्रदानं गुरोस्तदुपर्यधश्च तदिति । यथा षट्कलस्य पादस्य प्रस्तारे त्रयोदश भेदा भवन्ति। तेषु आद्यन्तगुरुः मध्यलघुद्वयश्च भेदो दृष्टः । स च किंसंख्याकोऽयमिति केनचित् पृष्टे सति तत्राद्यस्य गुरोरुपरि एकोद्देशः तस्याधो द्वितीयाङ्कः मध्यगतयोर्लघ्वोः प्रथमस्योपरि तृतीयाङ्को द्वितीयस्योपरि पञ्चमाङ्कः अथान्तस्य गुरोरुपरि अष्टमाङ्कः अधस्तु त्रयोदशाङ्कः इत्यङ्कप्रदानम् । तदनन्तरमन्त्या-ङ्कत्रयोदशात् गुरुशीर्षाङ्को नवाङ्को लोप्यः । तस्मादुर्वरितश्चतुरङ्कः । तेन ज्ञायते चतुर्थप्रभेदोऽयमिति । यथा वा तेष्वेव भेदेषु आद्यन्तलघुर्मध्यगुरुयुग्मः प्रभेदो दृष्टः । तत्राद्यलघूपरि एकाङ्को देयः मध्यगतयोर्गुर्वोः प्रथमस्योपरि द्वितीयाङ्कः अधस्तात् तृतीयाङ्कः द्वितीयस्योपरि पञ्चमाङ्कः अधस्तादष्टमाङ्कः अन्त्यलघू-

---

1. अत्र प्रस्तारभेदाः परं दृश्यन्ते । न तत्प्रदर्शकरेखा दृश्यन्ते ।

परि(तः ?)त्रयोदशाङ्कः इत्यङ्कप्रदानानन्तरमन्त्याङ्कत्रयोदशाद्गुरुशीर्षगतः सप्ताङ्को लो(प)[प्यः]। तस्मादुर्वरितःषडङ्कः तेन ज्ञायते षष्ठः प्रभेदोऽय-मिति। प्रभेद स्वरूपं दृष्ट्वा तस्य सं(ख्यो)[ख्या उ]द्दिश्य तेषु किंसंख्याकोऽयमिति। एवमन्यत्रापि बोध्यम् ॥ ४ ॥

अथ मात्रानष्टं लक्षयति—

अथ मात्रानष्टम्—

मात्राः सर्वाः कलाः कृत्वा पूर्वयुग्माङ्कसंयुताः।
अन्त्याङ्को लुप्तपृष्ठाङ्कः पूर्यते येन येन सः ॥ ५ ॥

तत्र तत्र गुरुं कुर्यात् गृहीत्वा तत्परां कलाम्।
मात्रानष्टमिति ब्रूते पिङ्गलः फणिनायकः ॥ ६ ॥

**मात्रा इति।** षट्कलस्य पादस्य त्रयोदशेषु भेदेषु चतुर्थो भेदः कीदृशो भवतीति केनचित्पृष्टः, तत्र चतुर्थे भेदे गुरुलघुरूपा या मात्राः सन्ति, ताः सर्वाः कलाः ह्रस्वमात्राः कृत्वा ताः षट्कला भूतास्ताः पूर्वयुग्माङ्कसंयुताश्च कृत्वा पूर्वाङ्केन युक्तो योऽङ्कस्त(यु)[द्यु]क्तशिरस्काः कृत्वेत्यर्थः। एवं स्थापनायां सत्यां नष्टस्य चतुर्थभेदस्य व्यक्तिः कथं स्यादिति। तदुपायमाह—**अन्त्याङ्क इति।** सोऽन्त्याङ्को लुप्तपृष्ठाङ्कः सन् येन येन पूर्यते तत्र परां कलां गृहीत्वा गुरुकुर्यात्। अन्त्याङ्कस्त्रयोदशाङ्कः। तस्मात्पृष्टाङ्के चतुरङ्केऽपि नीते नवाङ्क उर्वरितो भवति। स येन येन प्रथमं पञ्चमकलाङ्केन पूर्यते नवत्वं प्राप्नुयात्, तत्र तत्र प्रथमं पञ्चम-कलास्थाने ततः परया कलया सहैकीकृत्य गुरुमात्रां लिखेदित्यर्थः। ततो नष्टस्य गुरुलघुलघुगुरुरूपस्य चतुर्थभेदस्य ऽ।।ऽ व्यक्तिर्भवति। यस्याः शिरस्युर्वरिताङ्कः स्थितो दृश्येत तां कलां परया सह गुरुं कुर्यात्। तदुदाहृत्य तु पञ्चमप्रभेद एष्टव्यः। एवमंशान्तराण्यपि व्यञ्जनीयानि। द्विकलादीनां च भेदा व्यञ्जनीयाः सुधीभिः ॥ ६ ॥

अथ मात्रामेरुमाह—

अथ मात्रामेरुः—

द्वौ द्वौ कोष्ठावेकवृद्ध्या कृत्वाऽन्त्येष्वेकमर्पयेत्।
आद्या(अ)[न्त्र]पूरयेदेकद्व्येकत्र्येकचतुःक्रमात् ॥ ७ ॥

**द्वाविति** । द्वौ द्वौ पङ्क्तिकोष्ठौ समौ लेख्यौ । तदधः पुनरेकवृद्ध्या द्वौ द्वौ कोष्ठौ समौ लेख्यौ । एकवृद्ध्येत्युक्तेर्द्वयोः कोष्ठयोः कोष्ठान्तराणि भवन्तीति सूच्यते । एकवृद्ध्येत्येकैकवृद्ध्येत्यर्थः । अयमत्र निष्कर्षः—प्रथमे पङ्क्तिकोष्ठे कोष्ठद्वयं तथा द्वितीयेऽपि । तृतीये चतुर्थे च कोष्ठत्रयं, पञ्चमे षष्ठे च कोष्ठचतुष्टयं, सप्तमे अष्टमे च कोष्ठपञ्चकम् । एवमेवाग्रेऽपि बोध्यम् । एककलायाः प्रस्तारो नास्तीति कोष्ठद्वयात्मिकैवादौ पङ्क्तिः ॥

| | | |
|---|---|---|
| १ | | |
| १ | १ | |
| २ | १ | |
| १ | ३ | १ |
| ३ | ४ | १ |
| ६ | ५ | १ |

इत्थं कोष्ठान् विरचय्य कोष्ठेष्वधोऽधोऽङ्कलेखविधिमाह—**अन्त्येष्वेकमिति** । अन्त्येषु सर्वेषु कोष्ठेष्वेकमङ्कमर्पयेत् । आद्यान् कोष्ठांस्तु एकांक(द्वै)[द्व्ये]कत्र्येक चतुरादिभिः पूरयेत् । तत्राद्येषु कोष्ठेषु प्रथमे एकाङ्कः, द्वितीये द्व्यङ्कः, तृतीये पुनरेकाङ्कः चतुर्थे त्र्यङ्कः, पञ्चमे पुनरेकाङ्कः षष्ठे चतुरङ्कः, सप्तमे पुनरेकाङ्कः, अष्टमे पञ्चाङ्को देयः । एवमेवाग्रेऽपि । इत्थमन्त्याद्यकोष्ठेष्वङ्कदानं भवति ॥ ७ ॥

| | | | | |
|---|---|---|---|---|
| १ | | | | |
| १ | १ | | | |
| २ | १ | | | |
| १ | ३ | १ | | |
| ३ | ४ | १ | | |
| १ | ६ | ५ | १ | |
| ४ | १० | ६ | १ | |
| १ | १६ | ७ | ७ | १ |
| ५ | २३ | १४ | ८ | १ |

अथ मध्यकोष्ठेष्वङ्कदानमाह—

मूर्धाङ्कतत्पराङ्काभ्यां तिर्यग्भ्यां मध्यगान् भरेत् ।
मात्रामेरुरयं प्रोक्तः फलं वेद्यम्भवेदितः ॥ ८ ॥

**मूर्धाङ्केति** । पूरणीयकोष्ठमूर्धकोष्ठतत्परकोष्ठस्थौ तिर्यग्भूतौ(द्य)[द्वा]वङ्कावेकीकृत्य मध्यस्थान् पूरयेदित्यर्थः । ईदृग्लक्षणोऽयं मात्रामेरुरुच्यते । एतस्य फलं तु वर्णमेरुवद्भवेदित्याह—**फलमिति** । द्विकलादीनां मात्राछन्दसां स्वप्रस्तारे कति भेदाः सर्वगुरवः, कति एकादिगुरवः, कति सर्वलघवः का वा प्रस्तारसंख्येति प्राप्ते मेरुणानेनोत्तरं देयं, तथाहि - द्विकलप्रस्तारे एको गुरुरूपः एकः सर्वलघुः प्रस्तारसङ्ख्या तु द्वयम् । त्रिकलप्रस्तारे द्वावेकगुरू एकः सर्वलघुः प्रस्तार-

संङ्ख्या तु (पञ्च)[ त्रयम् । ] चतुष्कलप्रस्तारे एकः सर्वगुरुः त्रय एव एकगुरवः, एकः सर्वलघुः सङ्ख्या तु पञ्चकम् । पञ्चकलप्रस्तारे त्रयो द्विगुरवः, चत्वार एकगुरवः एकः सर्वलघुः सङ्ख्या(ला)[त्व]ष्टकम् । षट्कलप्रस्तारे एकः सर्वगुरुः (त्रय,[षट्]द्विगुरवः पञ्चैकगुरवः, एकः सर्वलघुः सङ्ख्या तु त्रयोदशकमिति । एवमन्यत्रापि बोध्यम् ॥ ८ ॥

अथ मात्रापताकामाह—

अथ मात्रापताका—

अङ्कान् मात्रापताकायां लिखित्वोद्दिष्टवत् क्रमात् ।
अन्त्याङ्के वामगाल्लुँम्पन् पुच्छे शिष्टान् समर्पयेत् ॥ ९ ॥

**अङ्कानिति ।** मात्रपताकायां मात्रोद्दिष्टवदङ्कान् विलिखेत् । यथा पञ्चकलप्रस्तारे १, २, ३, ५, ८, एकद्वित्रिपञ्चाष्टाङ्का लिख्यन्ते । यथा च षट्कलप्रस्तारे १,२,३,५,८,१३ एकद्वित्रिपञ्चाष्टत्रयोदशाङ्का लिख्यन्ते । पताकावंशदण्डे मात्रोद्दिष्टरीत्याङ्का स्थाप्या इत्यर्थः । ततः सर्वा(सांके)[न्त्याङ्के]तद्वामभागवर्तिनोऽङ्कान् विलुंपन् शिष्टानुबं(रीन)[न्धिनोऽ]ङ्कान् पताकापुच्छेष्वधोऽधो [ विलिखेत् । ] वंत्यक्त(?) वृत्ताधिकाङ्को यावान् प्रस्तार:[तावन्तो]भेदा भवन्तीत्येतदप्यत्रानुसर्तव्यमिति पताकोद्दिष्टिः ॥ ९ ॥

**मात्रापताका**

⊕ 1




⊕ 1, 2 and 4 यथामातृकं प्रकटीकृताः ।
3 तृतीयो मात्राप्रस्तारो द्वितीयप्रस्तारस्य शुद्धपाठत्वेन योजितः ।

**मात्राप्रस्तारः**

| 2 | 3 |
|---|---|
| ऽऽऽ१ | ऽऽऽ |
| ।।ऽऽ२ | ।।ऽऽ |
| ।ऽ।ऽ३ | ।ऽ।ऽ |
| ।ऽ।।।४ | ऽऽ।। |
| ।।।।ऽ५ | ।।।।ऽ |
| ।ऽऽ।६ | ।ऽऽ। |
| ऽ।ऽ।७ | ऽ।ऽ। |
| ।।।ऽ।८ | ।।।ऽ। |
| ऽ।।ऽ९ | ऽ।।ऽ |
| ।।ऽ।।१० | ।।ऽ।। |
| ऽऽ।।११ | ।ऽ।।। |
| ऽ।।।।१२ | ऽ।।।। |
| ।।।।।।१३ | ।।।।।। |

**मात्रापताका**

4

| १ | २ | ३ | ५ | ८ | १३ |
|---|---|---|---|---|---|
| ३ | | | ८ | ११ | |
| ४ | | | १० | | |
| ६ | | | १२ | | |
| ७ | | | १३ | | |
| ९ | | | | | |

मात्रापताकाफलमाह—

एकेनैकगुरुर्लोपे द्वाभ्यां द्विगुरुरीर्यते ।
त्रिभिस्त्रिगुरुरित्याह फलमाह भुजङ्गराट् ॥ १० ॥

**एकेनेति** । पताकायामेकेनान्त्याङ्कावयवे लुप्ते एकगुरुर्भेदः, द्वाभ्यां तस्मिन् लुप्ते द्विगुरुरीर्यते, त्रिभिः तस्मिन् लुप्ते त्रिगुरुरीर्यत इत्याह पिङ्गलः । यथा षट्कलप्रस्तारे१,२,३,५,८,१३, एकद्वित्रिपञ्चाष्टत्रयोदशाङ्का भवन्ति । तेष्वन्त्यस्त्रयोदशाङ्कः ( तद्वऽष्टाक्याङ्कः ) [ तद्वामगोऽष्टाङ्कः ] तेन त्रयोदशाङ्के लुप्ते पञ्चाङ्कः शिष्टः तस्य पूर्वत्र सत्त्वात् परकलया गुरुभावाच्च पञ्चाङ्कयं पंक्तिक्रमः कार्यः ।

| | |
|---|---|
| ऽऽऽ | १ |
| ।।ऽऽ | २ |
| ।ऽ।ऽ | ३ |
| ऽ।।ऽ | ४ |
| ।।।।ऽ | ५ |
| ।ऽऽ। | ६ |
| ऽ।ऽ। | ७ |
| ।।।ऽ। | ८ |
| ऽऽ।। | ९ |
| ।।ऽ।। | १० |
| ।ऽ।।। | ११ |
| ऽ।।।। | १२ |
| ।।।।।। | १३ |

| १ | २ | ३ | ५ | ८ | १३ |
|---|---|---|---|---|---|
| १ | २ | | | ५ | १३ |
| | ३ | | | ८ | |
| | ४ | | | १० | |
| | ६ | | | ११ | |
| | ७ | | | १२ | |
| | ९ | | | | |

तथा पञ्चभिस्त्रयोदशाङ्के लुप्तेऽष्टाङ्कः शिष्टः स पञ्चमाधः त्रिभिः त्रयोदशाङ्के लुप्ते १० दशाङ्कः शिष्टः सोऽष्टाधः द्वाभ्यां त्रयोदशाङ्के लुप्ते ११ एकादशाङ्कः शिष्टः स दशाधः एकेन त्रयोदशाङ्के लुप्ते १२ द्वादशाङ्कः शिष्टः स एकादाशाधः। मेरावेकगुरुस्थानानां पञ्चत्वात् नाग्रे सञ्चारः। अथ द्विगुरुरूपाणि। पञ्चाष्टभिस्त्रयोदशलोपे भागाभावात् तद्वामस्थैस्त्रयोदशलोपे २ द्व्यङ्कः शिष्टः। तस्य सत्त्वात्परकल्या गुरुभावात् षट्कलप्रस्तारे तद् द्व्यङ्कात् द्विगुरुपङ्क्तिक्रमः। द्व्यष्टभिस्त्रयोदशलोपे त्र्यङ्कः ३ शिष्टः, स द्व्यधः। (एकाष्ट सद्व्यधः) एकाष्टभिस्त(तो)[ल्लोपे] ४ चतुरङ्कःशिष्टः, स त्र्यधः। पञ्चत्रिभिस्तल्लोपे पञ्चाङ्कः ५ शिष्टः, स च वृत्तत्वान्न स्थाप्यः। पञ्चभि(र्द्व्य)[र्द्वा]भ्यां च तल्लोपे षडङ्कः ६ शिष्टः स चतुरधः पञ्चभिरेकेन च तल्लोपे ७ सप्ताङ्कः शिष्टः, स षडधः। द्वित्रिलोपे वृत्तएव। एकत्रिभिस्तल्लोपे ९ नवाङ्कः शिष्टः स सप्ताधः। षडेव द्विगुरुस्थानानि मेरावुक्ते। अथ त्रिगुरुरूपाणि। त्रिपञ्चाष्टलोपे भागो नास्ति। एकद्विपञ्चलोपो ऽप्यष्टात्मको वृत्तः। एकद्वित्रिलोपो वृत्तः। एकत्र्यष्टभिस्तल्लोपे एकाङ्कः १ शिष्टः स चाद्ये स्थाने सर्वगुरुरूपोऽस्तीति बो(धकः)[ध्यम्]। एवमन्यत्र बोध्यम् ॥ १० ॥

अथ मात्रामर्कटीमाह—

अथ मात्रामर्कटी—

पङ्क्तीः किल षट् कृत्वा संख्यास्तु कोष्ठकान् विलिखेत्।

एकाद्यङ्कैः प्रथमामुद्दिष्टाङ्कैर्भरेद्द्वितीयां च।
युञ्जीत प्रथमाद्योरङ्कैर्गुणितैस्तृतीयां च ॥ ११ ॥

**पङ्क्तीरिति** ।। मात्रामर्कट्यां षट् पङ्क्तीः कृत्वा तासु मात्रासंख्याकान् कोष्ठान् विलिखेत् । तत्र प्रथमां पङ्क्तिमेकाद्यङ्कैरेकद्वित्रिचतुरादिभिरङ्कैर्भरेत् पूरयेत् । द्वितीयां पङ्क्तिमुद्दिष्टाङ्कै(र्मादि)[मात्रोद्दि]ष्टाङ्कैरेकद्वित्रिपञ्चाष्टत्रयोदशकैक· विंशत्यादिभिर्भरेत् । प्रथमाद्योः प्रथमाद्द्वितीययोः पङ्क्त्योः अङ्कैर्गुणितैस्तृतीयां पङ्क्तिं युञ्जीत । तयोरङ्कान् गुणयित्वा भरेदित्यर्थः । एकचतुर्नवविंशति-चत्वारिंशदादिभिः पूरयेदिति यावत् ।। ११ ।।

अथ चतुर्थपङ्क्तेः पूरणम्—

बिन्दुमथैकं दत्वा द्विगुणं तमेवमन्यांश्च ।
विघटय्य तृतीयाङ्के तच्छेषैः पूरयेत्तुर्याम् ।। १२ ।।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | छं | दः |
| १ | २ | ३ | ५ | ८ | १३ | प्रभे | दः |
| १ | ४ | ९ | २० | ४० | ७८ | मा | त्रा |
| ० | १ | २ | ५ | १० | २० | गु | रु |
| १ | २ | ५ | १० | २० | ३८ | ल | घु |
| १ | ३ | ७ | १५ | ३० | ५८ | व | र्णः |

## ।। मात्रामर्कटी ।।

**बिन्दुमिति** । अथ द्वितीये कोष्ठे एकं दत्वा तमेकं द्विगुणं द्व्यङ्कं तृतीय-पङ्क्तिस्थाच्चतुरङ्कात् विघटय्य दूरीकृत्य तच्छेषेण द्व्यङ्केन तृतीयः कोष्ठः पूर्यः । एवमन्यांश्च द्विगुणान् कृत्वेत्युक्तेः तं तृतीयकोष्ठस्थं द्व्यङ्कं द्विगुणं चतुरङ्कं कृत्वा तं तृतीयपङ्क्तिस्थान्नवाङ्काद्विघटय्य तच्छेषेण पञ्चाङ्केन चतुर्थः कोष्ठः पूर्यः । एवमेवा-ग्रिमाः कोष्ठाः पूर्याः । अनया रीत्या चतुर्थीं पङ्क्तिं पूरयेत् ।। १२ ।।

अथ पञ्चमषष्ठपङ्क्त्योः पूरणम्—

तिर्यक् तुर्याकोष्ठैः संयु(ज्या)[ञ्ज्या]त्पञ्चमीं चतुर्थ्याद्योः ।
मिलितैरङ्कैष्षष्ठीं स्यान्मात्रामर्कटी ह्येषा ।। १३ ।।

**तिर्यगिति** । अथ पञ्चमीं पङ्क्तिं तुर्याको(ष्ट्यौ)[ष्ठैश्च]श्चतुर्थपङ्क्त्यङ्क-बृन्दैः संयु(ज्या)[ञ्ज्या]द्भरेत् तिर्यग् यथा स्यात् तथेति भरणक्रियायां विशेषणम् ।

अथ चतुर्थ्याद्योः चतुर्थीपञ्चम्योः पङ्क्त्योर्मिलितैरङ्कैः षष्ठीं च पङ्क्तिं संयु(ज्या) [ञ्ज्या]त् । तयोरङ्कान् युक्तान् कृत्वा तां भरेदित्यर्थः । एकत्रिसप्तपञ्चदश-त्रिंशदादिभिस्तां पूरयेदिति यावत् । एषा हि मात्रामर्कटी स्यात् ॥ १३ ॥

अस्या ज्ञानात्फलमाह—

छन्दःप्रभेदकलिकागुरुलघुवर्णप्रसंख्यात्री ॥ १४ ॥

**छन्दःप्रभेदेति**—यथैककलं छन्दः प्रथमं तस्यैको भेदः एका कला तस्य गुरुवर्णो नास्तीति बिन्दुदानादवगम्यते । लघुवर्ण एको भवति ? तथा वर्णः स एवैक इति । यथा वा द्विकलं छन्दो द्वितीयं भवति । तस्य द्वौ भेदौ द्विभेदस्य तस्य कलाश्चतस्रो भवन्ति । गुरुवर्ण एकः लघुवर्णौ द्वौ सङ्कलनया त्रयो वर्णा इति । एवं त्रिकलादिषु ज्ञेयम् ॥ १४ ॥

| | | | | | |
|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | छन्दः |
| १ | २ | ३ | ५ | ८ | प्रभेदः |
| १ | ४ | ९ | २० | ४० | मात्रा |
| ० | १ | २ | ५ | १० | गुरु |
| १ | २ | ५ | १० | २० | लघु |
| १ | ३ | ७ | १५ | ३० | वर्णः |

## ॥ मात्रामर्कटी ॥

एवं ग्रन्थार्थं समाप्य एतद्ग्रन्थफलस्य भगवत्प्रसादफल[त्व]माह—

संचीर्णच्छन्दांसि प्रकुर्वतो बहुविधानि चरितानि ।
विष्णोर्नवप्रभोऽयं स्याच्छन्दःकौस्तुभः प्रीत्यै ॥ १५ ॥

**संचीर्णेति** । संचीर्णानि कृतानि छन्दांसि येभ्यस्तादृशानि बहुविधानि नवरसवन्ति चरितानि प्रकुर्वतो विष्णोः प्रीत्यै प्रसादायायं छन्दःकौस्तुभः स्यात् । कीदृश इत्याह-**नवप्रभ इति** । नवप्रकरण इत्यर्थः । मणिपक्षे तु नूतनकान्तिकः ॥१५॥

अवशिष्टानां छन्दसां लक्षणानि पञ्चदश [प्रदर्श्यन्ते] ॥

नगणसगणाङ्कितो जनजगुरुसंयुतः ।
भवति किल **गुच्छको** वसुयतिविभूषितः ॥ १ ॥

षोडशकलचरणं भुवि संप्रति
मोदविवर्धकमखिलजनं प्रति ।
शेषयमकलघुयुगलमनोहर-
मतिरुचि **कोरक**संज्ञ(गुर)[मुदा]हर ॥ २ ॥

अरिल्मन्ये ।

एकादशकलधारि
बुधजनमानसहारि ।
इद**मनु**कूलमवेहि
लघुकमन्तमनुधेहि ॥ ३ ॥

**प्रफुल्लकुसुमाली** सतीयमतिमोदा ।
जसौ रगणनौ चेत्ततो(गुरुयुग्मकम्)[थ गुरुयुग्मम्] ॥ ४ ॥

(सगसं)[सजसान्]निधाय जगणं विधाय कविसौख्यधाम **कलगीत-नाम** ॥ ५ ॥

**द्विपदी** परिगदिता सा द्वादशकलयुक्ता या ॥ ६ ॥

हारि(हा)[ह]**रिणमे**(न)[त]द(म)[थ]लमस्ति भसनत्वेन सरुचि ॥ ७ ॥

नगणतो रर**ाविन्दिरा** लगौ ॥ ८ ॥

**मुग्धसौरभ**नाम धेहि रसौ जजौ च भरौ यदा ॥ ९ ॥

छन्दस्तु(तोयलौ)[तयौ लौ] यदिसं**फुल्लक**नामाञ्चति ॥ १० ॥

**(विद्रित्वलि)**[विद्धि तद**लि**-]**भङ्ग**मखिलवन्दिहृदयलोभि ।
पञ्चकयतिधारि भसनजेन नगलशोभि ॥ ११ ॥

**कान्तिडम्बरमन्ततो** लघु पूर्वतो रसजैश्च वैभवि ॥ १२ ॥

भणत **मुखदेव**मिह नसलशोभि ॥ १३ ॥

निखिलविकलितरुचिनगणपञ्चकम् ।

यदि तदनु भवति किल **गुच्छकमिति** ॥ १४ ॥

गुच्छकभेदोऽयम् ।

(भृ)[शृ]ङ्गारमेतच्चतुर्भिश्च तैर्विद्धि ॥ १५ ॥

एतानि प्राकृतपिङ्गलानुसारीणि दुर्गेश्वरभट्टेन विरचितानि बोध्यानि ॥

अथ स्वनामनिर्देशपूर्वकं ग्रन्थमुपसंहरति-

द्विजकुलतिलकः श्रीमान् राधादामोदरो हरेः प्रेष्टः ।

स्वर्णैस्सूत्रैर्ग्रथितं छन्दःकौस्तुभमिमं व्यतनोत् ॥ १६ ॥

**द्विजेति** । राधादामोदरः छन्दःकौस्तुभमिमं व्यतनोदकरोदित्यर्थः । कीदृश-मित्याह—**स्वर्णैरिति** । स्वर्णानि चित्राक्षराणि यानि सूत्राणि लक्षणानि तैर्ग्रथितं निर्मितम् । मणिपक्षे कनकजैरेकगुम्फितम् ॥ १६ ॥

अथैतद्ग्रन्थोक्तानि छन्दांसि परिगणयति—

**वेदर्तुपक्षसंख्याताः छन्दसां व्यक्तयोऽत्र** याः ।

लिखिताः सन्ति तास्सन्तः कलयन्तु कृपाकुलाः ॥ १७ ॥

**॥ इति छन्दःकौस्तुभे मात्राप्रस्तारो नाम नवमी प्रभा ॥ ९ ॥**

**वेदेति**—अङ्कानां वामगत्या स्थापनात् **चतुष्षष्ट्युत्तरं शतद्वयमिह छन्दांसि भवन्ति । वर्णच्छन्दांसि गुणपक्षपक्षसंख्यानि २२३ । मात्रा छन्दांसि चन्द्राब्धिसंख्यानि ४१ । उभयानि तु वेदर्तुपक्षसङ्ख्यानीति २६४ ॥**

श्रीराधादामोदरशिष्यो विद्याभूषणो नाम्ना ।
छन्दःकौस्तुभशास्त्रे भाष्यमिदं संप्रति व्यदधात् ॥

**इति श्रीराधादामोदरशिष्य - विद्याभूषणविरचिते**

**छन्दःकौस्तुभभाष्ये मात्राप्रस्तरवर्ण[नं]नाम**

**नवमी प्रभा ॥ ९ ॥**

**मूल[1]श्लोकसङ्ख्या २५० ॥**

**टीकाश्लोकसंख्या ७५० ॥**

**मिलित्वा १००० ॥**

**॥ ग्रन्थस्समाप्तः ॥**

—: * :—

1. अत्र श्लोकशब्दो द्वात्रिंशदक्षरपरिमितवर्णसंघातरूढग्रन्थपर्यायः स्यादिति भाति ॥

## ॥ विषयानुक्रमणिका ॥

Vol. XI. No. 2

### प्रथमप्रभा ॥ 1 ॥



### द्वितीयप्रभा ॥ 2 ॥

| क्रमसङ्ख्या | पुटसङ्ख्या |
|---|---|
| 42. शशिवदना | 14 |
| 43. सोमराजी | " |
| 44. वसुमती | " |
| उष्णिग्भेदलक्षणानि | |
| 45. मधुमती | " |
| 46. कुमारललिता | " |
| 47. मदलेखा | " |
| 48. चूडामणिः | 15 |
| 49. हंसमाला | " |
| अनुष्टुब्भेदलक्षणानि | |
| 50. चित्रपदा | " |
| 51. विद्युन्माला | " |
| 52. माणवकम् | " |
| 53. हंसरुतम् | " |
| 54. समानिका | 16 |
| 55. प्रमाणिका | " |
| 56. वितानम् | " |
| 57. नाराचकम् | " |
| 58. पद्ममाला | 17 |
| 59. सुचन्द्राभा | " |
| 60. सुविलासा | " |
| बृहतीभेदलक्षणानि | |
| 61. हलमुखी | " |
| 62. भुजगशिशुसृता | " |
| 63. मणिमध्या | 18 |
| 64. भुजङ्गसङ्गता | " |

| क्रमसङ्ख्या | पुटसङ्ख्या |
|---|---|
| पङ्क्तिभेदलक्षणानि | |
| 65. रुक्मवती | 18 |
| 66. मत्ता | " |
| 67. शुद्धविराड् | " |
| 68. पणवम् | " |
| 69. मयूरसारिणी | 19 |
| 70. त्वरितगतिः | " |
| 71. मनोरमा | " |
| त्रिष्टुब्भेदलक्षणानि | |
| 72. इन्द्रवज्रा | " |
| 73. उपेन्द्रवज्रा | " |
| 74. उपजातिः | 20 |
| 75. उपस्थिता | " |
| 76. सुमुखी | " |
| 77. शालिनी | " |
| 78. दोधकम् | " |
| 79. वातोर्मी | 21 |
| 80. भ्रमरविलसिता | " |
| 81. रथोद्धता | " |
| 82. स्वागता | " |
| 83. वृत्ता | " |
| 84. भद्रिका | " |
| 85. श्येनी | 22 |
| 86. उपस्थितम् | " |
| 87. श्रीः | " |
| 88. शिखण्डितम् | " |
| 89. अनुकूला | " |
| 90. मोटनकम् | 23 |

| क्रमसङ्ख्या | पुटसङ्ख्या |
|---|---|
| 141. स्रग् | 32 |
| 142. गुणमणिनिकरः | " |
| 143. मालिनी | " |
| 144. प्रभद्रकम् | 33 |
| 145. एला | " |
| 146. लीलाखेलः | " |
| 147. विपिनतिलकम् | " |
| 148. चन्द्रलेखा | " |
| 149. तूणकम् | 34 |
| 150. चित्रा or चित्रम् | " |
| 151. मृदङ्गकम् | " |
| 152. चन्द्रकान्ताभिधा | " |
| 153. वृषभः | " |
| अष्टिभेदलक्षणानि | |
| 154. चित्रसंज्ञम् | 35 |
| 155. पञ्चचामरम् | " |
| 156. ऋषभगजविलसितम् | " |
| 157. चकिता | 36 |
| 158. मदनललिता | " |
| 159. मणिकल्पलता | " |
| 160. प्रवरललितम् | " |
| 161. वाणिनी | " |
| 162. अचलधृतिः | " |
| 163. यतिः | 37 |
| 164. गरुडरुतम् | " |
| अत्यष्टिभेदलक्षणानि | |
| 165. शिखरिणी | " |
| 166. वंशपत्रपतितम् | 37 |
| 167. नर्दटकम् | " |
| 168. कोकिलकम् | 38 |
| 169. पृथ्वी | " |
| 170. मन्दाक्रान्ता | " |
| 171. हारिणी | " |
| 172. समदविलासिनी | 39 |
| 173. द्रुता | " |
| धृतिभेदलक्षणानि | |
| 174. कुसुमलतावेल्लिता | " |
| 175. नन्दनम् | " |
| 176. नाराचम् | " |
| 177. नाराचलता or लता | 40 |
| 178. नाराचतारका or तारका | " |
| 179. शार्दूलललिता | " |
| 180. चित्रलेखा | " |
| 181. हरकुन्तनम् | " |
| अतिधृतिभेदलक्षणानि | |
| 182. मेघविस्फूर्जिता | " |
| 183. छाया | 41 |
| 184. शार्दूलविक्रीडितम् | " |
| 185. सुरसा | " |
| 186. फुल्लदाम | " |
| 187. वल्लकी | " |
| कृतिभेदलक्षणानि | |
| 188. सुवदना | 42 |
| 189. गीतिका | " |

| क्रमसङ्ख्या | पुटसङ्ख्या |
|---|---|
| 316. मात्रामेरुः | 11 |
| 317 .मात्रामेरुविधानम् | 12 |
| 318. मात्रापताका | 13 |
| 319. मात्रापताकाज्ञानफलम् | 14 |
| 320. मात्रामर्कटी | 15 |
| 321. मात्रामर्कटीज्ञानफलम् | 17 |
| 322. ग्रन्थफलनिरूपणम् | ” |
| 323. भाष्ये वृत्तान्तरनिरूपणम् | 18 |
| 324. छन्दःकौस्तुभग्रन्थोपसंहारः | 19 |
| 325. छन्दःकौस्तुभोक्तवृत्तपरिगणनम् | ” |
| 326. छन्दःकौस्तुभभाष्योपसंहारः | 20 |
| 327. विषयानुक्रमणिका | 21 |

—: * :—

# VIRALIMALAI-K-KURAVANCI

**Edited by Pulavar M. PASUPATHY**

## விராலிமலை சுப்பிரமணிய சுவாமி குறவஞ்சி நாடகம்

(Continued from Page 50 & Volume XII No. 1.)

வசனம்

ஆகோ! வாராய் பெண்ணே! குறமகளே! நீ யறிந்து வந்த மலைகளெல்லாஞ் சொல்லக் கேட்டு மகா சந்தோஷமாச்சுது. ஆனால் உங்கள் விராலி மலையிலுள்ள அதிசயமும் வளப்பமும் சொல்லும் பெண்ணே!

ஆனால், அப்படியே சொல்லுகிறேன் கேளீரியம்மே!

தரு

40. வாசமேவும் விராலி மாமலை
வளமைசொல்லக் கேளாய்
மறைவா ணரும்தமிழ் வாணரும்
மகிழ்ந்தே கலைபுகல்வார்
நேசமாய் வளர்முனி வோர்களும்
ரிஷீஸ்பரர் முதலாய்
நித்தமும் வெகுபத்தி யாகவே
நின்றுதவம் புரிவார்
விண்ணோர் சிங்கம் வரவேகண்டு
வேள்மனந் திகைக்கும்
மேடம் வரக்கண் டேபுலி
மிகவும்சினந் ததட்டும்
தண்ணோர் மதிமா னைப்புலி
தாவிமிகப் பாயுந்
தனியே கவிகட கம்வரத்
தானேகண்டு விரளும்

மலர்மேல் வண்டு மோதுமது
வழிந்தே மிகவோடும்
வருபானு வின்புரவி யின்கால்
வழுக்கி ரதஞ்சருக்கும்
நலமார்சங்கந் தவழுந் தத்தி
நாடிக்கலை யலைபாயும்
நயமாகிய சிப்பி முத்து
நழுவிமிதந் தோடும்
கவிகள் கமுகேறி நின்று
கதித்தே யசைந்தாடுங்
கன்னல் மிகச்சோ ரிமதி
செல்லும் வழிகாணும்
மயங்கும் இளங்கமு கோடினைப்
பெருக்கும் இவையாவு
மாய்க்கும் கதிரோன் றன்னைச்
சிவந்தகனி யென்றே
சிலமந் திகள்தா விமதி
தியங்கும் மனமயங்கும்
பசுவுங் கொடுபுலி யுஞ்சேர்ந்து
பரிவாய்ச் சுனைநீரைப்
பருகிக் கரையேறி வந்து
படுக்குமொரு தலத்தில்
இசைவாய் நாகங் கீரியுடன்
இணங்கி விளையாடும்
எலிபூனை களுட னேசேர்ந்
திருந்தே மனம்பொருந்தும்
இன்னம் வெகுமகி மையுண்டு
இன்பமுடன் கேளாய் !
எருமைவிருட் சத்தின்பா லுண்போ
ரிருப்பார் வெகுகாலம்
இன்னுஞ் சோதிப்புல் லுண்டதை
விரும்பிமிகப் பொசித்தால்
மேனி தங்கமய மாய்ப்புவி
மீதிலிருப் பார்கள்
நலஞ்சேர் கருநெல் லிக்கனி
யுண்டுஅதை யுண்டோர்
நறைமாறி யெவ்வர்ண மாகவெந்
நாளுமகிழ்ந் திருப்பார்

இலைகாய் மரமெல் லாமினித்
திருக்கும் ஒருவேம்பு
இன்பமுடன் தின்ருல் காய
மிறுகிச் சித்திபெறுவார்
பச்சிலை தனிலொன் றுண்டதைப்
பறித்துத் திலத மிட்டால்
பதினுலு கெல்லாம் சுத்தி
பார்த்துமிக வரலாம்
இச்சமாய்ப் பின்னுமொரு பச்சிலை
மெத்தவுந் தானுண்டு
வெள்ளியமு மிரும்புஞ் செம்பு
மிகவுந்தங்கஞ் செய்யலாம்
அன்பாய்ப் பின்னுமொரு பச்சிலை
அரைத்துத் திலதமிட்டால்
அடங்கா தவர்சேர் வார்வந்து
அழுகிலும் மதனுவார்
இன்ப முடனொரு மூலிகை
யிருக்குமதைத் தரித்தால்
எண்ண மான ரூபமெடுத்
தியல்பாய்ச் சென்றுவரலாம்
எங்கள் மலைதனி லேசஞ்
சீவி முதலாக
இன்னம் வெகுகோ டிவளம்
இருக்குதடி யம்மே!
துங்க மயில்மீ தில்வரும்
சுப்பிரமணியர் நாட்டில்
தோகை வடிவா கவளர்
மோகினியே கேளாய்.

கலித்துறை

41. சூர்தனை வென்றவடி வேல்முருகர் துலங்கும் வெற்பில்
வார்முலை மின்னு குறமயி லேசொந்த மாகவுங்கள்
தார்புனை வெற்பின் வளமையெல் லாம்சொன்ன
காரியம்போல்
சீருடன் நீகண்ட தேசமெல் லாமிப்பச் செப்புவாயே.

வசனம்

ஆகோ! வாரும் பெண்ணே! குறமகளே! உங்கள் மலைவள மெல்லாம் கேட்டு மகா சந்தோஷமாச்சுது. இனி, நீ யறிந்து வந்த தேசங்களையெல்லாம் சொல்லும் பெண்ணே!

மறு—வசனம்

ஆனால், அப்படியே சொல்லுகிறேன், கேளீர் யம்மே!

தரு

42. அவனிதனில் கண்டறிந்த தேசமெல்லாம்
அன்னமேநான் சொல்லக் கேளாய்
வளர்புவன மகிழ்வட காசிகல்யாணம்
பொருந்துங் கொல்லர்புதர் முதலாய்
(அவனிதனில்)

வங்காள மீராறு மலையாள மேழு
மரகதங் கச்சி கபாடம்வளர்
கொங்கங் குடகந் துருவமுச் சீனங்கு
கூதங் குலிங்கம் விலாடம் நல்ல
சிங்கள மீளுவஞ் சாளுவம் தேசம்
தெலுங்கு மாருட மிகு
கங்கந் துளுவங் கவுசிலை கேகயம் கண்டி
தேசந்திரி கூடம்உயர் கலிங்கம்
இங்கிதஞ்சேர் விராடங் கொச்சி காருட
தேசங் கர்நாடம்
(அவனிதனில்)

இந்துஸ்தானந் துலுக்காணங் கீர்வாண
மிசைவான கேரளம் தேசம்வளர்
சிந்து கபாடந் திராவிட மொட்டியஞ்
செழித்திடும் டில்லி விலாசம் வெகு
விந்தைகள்சேர் கொல்லஞ் சோனகத் தாரையும்
வெல்வதுதான் பிறை வாச மிகுந்தானே
அம்புவி தனிலெங்கும் சுத்திவந் தேன்வெகு
தேச மெங்கள் துரைவேலர் தேசந்தான் வாச
மெத்த துலங்கி வளரும் பிரகாசம்.
(அவனிதனில்)

கொச்சகம்

43. சீரிலங்கு பச்சைமயில் செவ்வேள் விராலிவெற்பில்
பேரிலங்க வாழ்குறப் பெண்மயிலே நீகேளாய்
பாரிலுள்ள தேசமெல்லாம் பாங்காய் உரைத்தபடி
தாரணியில் கண்டதெய்வத் தலங்களெல்லாம்
சொல்வாயே

## வசனம்

ஆ! கோ! வாராய்! பெண்ணே! குறமகளே! நீ அங்கங்கு சென்ற தேசங்களெல்லாம் சொல்லக் கேட்டு வெகு நேசமாய் மனது குளிர்ந்தது. இனி நீ தெரிசனஞ் செய்து வந்த தெய்வத் தலங்களை யெல்லாம் வரிசையாய்ச் சொல்லும் பெண்ணே!

ஆனல், அப்படியே சொல்லுகிறேன், கேளீரம்மே!

## தரு

44. சீரங்கம் திருவானைக் காவல்சி ராப்பள்ளி
திருவா வடுதுறை கன்னபுரமும்
திருவையார் கண்டியூர் குடந்தைமத் தியார்ச்சுனம்
சிதம்பரம் சீர்காழி முதலாய்
பேரம்ப லம்திருக் குற்ருலம் வேங்கிடம்
பேராக வளர்காஞ் சீபுரமும்
பேரூர் திருவாரூர் வேலூர் மறைக்காடு
பெருந்துறை செங்காட்டங் குடியுமன்னூர்
கோயில் திருவெண் காடு நாவலூர்
மாயூரந் திருவிடை மருதூர்
வளர்திரு வாடானை ராமேசு பரந்திரு
வடிஉத்திர கோச மங்கை
பொன்னூர் திருச்செந்தூர் தென்காசி கூடலும்
பூவணந் திருக்கோட்டி யூரும்
புகழ்திரு வேடகஞ் சோலைமலை யின்பம்
பொருந்தி வளர்கழுக் குன்றம்
ஆவினங்குடி சிவகிரி சுப்பிரமணி யமும்
வஞ்சிசெக ளுதங் காசி
அண்ணமலை கருவூர் கடம்பர் கோயில்
அழகுசி வாலயம் வயலூர்
காவுயர் கதிர்காமம் வைகுந்த முதலாகக்
கயிலா சமுமிக வறிவேன்
கதிக்கும் விராலி கிரிதன்னில் மேவிய
கந்தர் வளநாடு மறிவேன்.

## விருத்தம்

45. பொன்மருவும் வேல்முருகர் விராலிகிரி மீதிலன்பு
பொருந்தி வாழும்
மின்மருவுங் கும்பமுலை வஞ்சியரே ஒருவசனம்
விளம்பக் கேளாய்!

அன்புடனே கண்டதெய்வத் தலங்களெல்லாம் உரைத்த
வடிவழகு போல
இன்பமுடன் தென்விராலி நாட்டுவள மெல்லாம்நீ
இயம்புவாயே.

வசனம்

ஆ! கோ! வாரும் பெண்ணே! குறமகளே! தேசத்தில் நீ கண்டு வந்த தெய்வத் தலங்களை யெல்லாம் சொல்லக் கேட்டு நான் தரிசனஞ் செய்தாப் போலாச்சுது. வாசமகிழ் விராலி நன்னாடு மறிவோமென் றுயே; அந்த நாட்டு வளங்களைச் சொல்லவேணும் பெண்ணே!

ஆனல், அப்படியே சொல்லுகிறேன், கேளிரீயம்மே!

தரு

46. சோலைதனில் முகிலைக்கண்டு
தோகைக ளாடுந்
தொனிசேர்குயில் கூவி இன்பந்
தோணரா கம்பாடுஞ்
சாலமலர் மீதினில் (வண்டு)
வாய்த்திதிக் கூறுந்
தாவிக்கவி வாதில்கனி
மீதில்தா மூந்தீரும்
பரிவாயினஞ் சிறந்துகூடிப்
பார்த்துமகிழ்ந் திருக்கும்
பகலான் பந்தமெனவே வந்துப
கரமுட னெறிக்குந்
துரிசாய்த் தென்றல் வீசும்மழைத்
துளிபோல் மலர்சொரியும்
துலங்கிவளர் குமுதமிந்து
தோணமுகை விரியும்
கனிவீழ்ரசம் பாய்ந்தே செந்நெல்
கதித்தே வளர்ந்திருக்கும்
கன்னல்மிகச் செழித்தே இளங்
கமுகோடினைப் பெருக்கும்
வசனமிகு விராலிகிரி
வடிவேலர் நாட்டின்
வளமைசொல்ல முடியாதெங்கள்
மாதரசே கேளாய்!

### கலித்துறை

47. அடியார்க் கருளும் வடிவேல் முருகரன் பர்க்குநித்தங்
குடியா யிருக்கும் விராலி கிரியின் குறமகளே
துடியாய் விராலிநன் னாட்டின் வளங்களைச் சொன்னது [போல்
இடமா யறிந்த நதிகளெல் லாமிப்பச் செப்புவையே.

### வசனம்

ஆ! கோ! வாரும் பெண்ணே! குறமகளே! வாசமேவிய விராலி நன்னாட்டின் வளமையைச் சொல்லக்கேட்டு வெகு நேசமாய் மனது சந்தோஷமாச்சுது. இனி நீ கண்ணாரக் கண்டு வந்த நதிகளையெல்லாம் நன்றாகச் சொல்லவேணும் பெண்ணே!

ஆனால், அப்படியே சொல்லுகிறேன் கேளிரியம்மே!

### தரு

48. புண்ணியநதி தீர்த்த மெல்லாம்
புகலக் கேளும் பெண்ணரசே!
விண்ணவர்புகழ் விராலி வேலர்
பொன்னின் மாநதி போல — (புண்ணிய)
(புண்ணிய) கங்கைநதி யமுனைநதி
கிருஷ்ணை வேணி சரசுபதி
துங்க பத்திரை கோதாவரி
சொர்ண பத்திரை காவேரி (புண்ணிய)
சிந்து மணிமுத் தாநதி
சிறந்த பெண்ணை மாநதியுஞ்
சுந்த ரஞ்சேர் வேதநதி
துலங்கும் நர்மதா கவுரி (புண்ணிய)
வேகவதி தாம்பிர வேணி
விளங்குங் கன்னியா குமரி
வைகையோகந் தருமமரா
வதியுகந்த சண்முகநதி யறிவேன். (புண்ணிய)

### கலிப்பா

49. தென்னவன் வாழ்கூடலி லேசம ணாதிகளை
மின்னுங்கழு வேறவைத்த வேல்முருகர் விராலிவெற்பில்
நன்னயஞ்சேர் குறமாதே நதிவளப்பஞ் சொன்னது
போல்
இன்பமாய்க் கற்றவித்தை தன்னையெல்லாம்
சொல்வாயே.

### வசனம்

ஆ! கோ! வரும் பெண்ணே! குறமகளே! நீ கண்டு வந்த புண்ணிய நதிகளெல்லாம் சொல்லக் கேட்டு மகா சந்தோஷமாச்சுது. இனி, நீ கற்றறிந்த வித்தை யெல்லாம் சொல்லவேணும் பெண்ணே!

ஆனால், அப்படியே சொல்லுகிறேன்; கேளிரீயம்மே.

### தரு

50. கற்றறிந்த வித்தை யெல்லாங் கேளாய்!
கைகண்ட மூலிகை வகையுஞ் சொல்லுவேனே

வெற்றிவடி வேல்முருகர் விராலி நாட்டில்
சந்திரவின்ப வதனஞ் சிறந்த மின்னே இப்போது

ஆனையைப் பிடித்துவந்து கரகத்தி லடைப்போம்—துடி
யான சிங்கந் தனைக்குறங் காட்டியே வைப்போம்

பூனை தனை புலிவடி வாகச் செய்வோம்—நல்ல
புலிகளையும் பூனையாகப் பொருந்தச் செய்வோம்

வேங்கையைப் பிடித்து மருங்கிருக்கச் செய்வோம்—நல்ல
விதமாகவே மானையிரு விழியில் சேர்ப்போம்

பாங்கான கலையைப் பிடித்திடையில் கட்டுவோம்—
எங்கள்
பராக்கிரமத்தால் கரடியாட்டம் பார்த்து மகிழ்வோம்

பட்டமரந் தழைத்து தட்டிப் பால்வரச் செய்வோம்—
மரப்
பாவைகையச் சிரித்தின்பம் பகரச் சொல்லுவோம்

எட்டிக் காய்தனை மாங்கனியாகச் செய்வோம்—நல்ல
இரும்பையும் செம்பையும் தங்கமென்னச் செய்வோம்

தண்ணிக்குட் புகுந்துசோறு சமைத்து வருவோம்—
நாங்கள்
தண்ணிதனில் கல்மிதக்கத் தானும் செய்வோம்

எண்ணமான அக்கினியி லேறி நடப்போம்—புவி
யெங்குமரைச் சணத்தில் சுத்தி யிங்கே வருவோம்

இந்திரஜாலம் மயேந்திரஜாலம் கோகருண—மோடி
எடுக்கும் வித்தைக் காருடங்க ளெல்லாஞ் செய்வோம்

விந்தையான செம்புக் குள்ளே பந்தைத் திணிப்போம்—
பின்னும்
வேடிக்கையாய்ச் செம்பைக்காட்டி மூடிக் கொள்ளுவோம்

பச்சைமால் தனக்குமொரு பச்சிலை தந்தோம்—யாரும்
பார்க்கமூ வடியாய்இந்தப் பாரை யளந்தார்

மிச்சமான மூலிகையொன் றீசர்க் கீய்ந்தோம்—அவர்
மேருமலை யைவளைத்து வில்லாய்க் கொண்டார்

வரிசையா யனுமனுக்கொரு குளிசங் கட்டினேம்—
சென்று
மனோவேக மாய்ப்போய் சஞ்சீவியைக் கொணர்ந்தார்

பரிவுட னிந்திரர்க்கொரு மந்திரஞ் சொன்னேம்—மிகப்
பறந்துதிரி கிரிகளையும் பரவாமல் செய்தார்

இணங்கா தபேர் இணங்கவே..........தருவோர்-மனதில்
எண்ணிய கருமங்கள் கண்டு இன்பமாய்ச் சொல்வோம்

குணமிகு வித்தைக ளின்னம் வேணதுண்டு—கொக்
கோகநூல் படித்து வளர்மோ கினியே கேளாய்!

## விருத்தம்

51. இத்தனை வார்த்தைகள் படித்துச் சொல்பவரை இப்புவியி
லெங்கும் காணேன்
முத்தமிழ்சேர் விராலி கிரியிலனு தினமும்வளர்
முருகர் நாட்டில்
வித்தைமிகும் குறமாதே எந்தனைப்போ லாசை கொண்ட
மின்னார்க் கெல்லாம்
உத்தமமாய்க் குறியுரைத்து வரிசைபெற்ற வகை
முரைசெய் வாயே. [களெல்லா

## வசனம்

ஆ! கோ! வாரும் பெண்ணே குறமாதே! நீ கற்றறிந்த வித்தை யெல்லாம் கேட்டு மகா சந்தோஷமாச்சுது. இனி நீ அவரவர்க்குக் குறி சொன்னதும் அவரவர்கள் கொடுத்த வரிசைகளையும் விவரமாகச் சொல்லவேணும் பெண்ணே!

ஆனல், அப்படியே சொல்லுகிறேன் கேளீரம்மே!

## தரு

52\. மதுரை மீனாட்சிக்குச் சதுரு..........
.........யு மதிசூடி வருகுறி சொன்னேன்—முத்து
மாலையுங் கனவச்சிர ஓலையும் பொற்கம்பிச்
சேலையு மேயவர் கொடுத்தார் (1)

திருமகள் சீதைக்கு இராமன் மணஞ்செய்யுந்
திறமாக வேகுறி சொன்னேன்—வளர்
செங்கைக் கடையமு முன்கை மூதாரியு
மிங்கித மாகவே தந்தார் (2)

இரதியெனும் மாதுக்கும் மதராசன் மணஞ்செய்ய
இதவாக வருங்குறி சொன்னேன்—நவ
ரத்தினப் பதக்கமுங் கொடுத்துச் சரப்பணி
முத்துத் துராய்களுங் கொடுத்தார் (3)

அந்தமிகு இந்தி ராணி தனக்கந்த
இந்திரன் வருங்குறி சொன்னேன்—நல்ல
அஷ்டக் கடையமுங் குத்து முலைக்கச்சும்
முத்தில்முத் தாணியுங் கொடுத்தார் (4)

விந்தை யுடனரிச் சந்திரன் வருங்குறி
சந்திர மதிக்குநான் சொன்னேன்—நல்ல
மெட்டியும் பசுந்தங்கப் பொட்டியு மாணிக்கச்
சுட்டியு மேயவர் கொடுத்தார் (5)

சிந்தை மகிழ்தேவ குஞ்சரி வள்ளிக்கு
...........வருங்குறி சொன்னேன்—நல்ல
செம்பொற் சதங்கையும் தும்பிப் பதக்கத்
தொடம்புலித் தாயித்துங் கொடுத்தார் (6)

வங்களப..........ரங்குறி
வங்கண மாகவே சொன்னேன்—நல்ல
வக்ர மணிகளும் மிக்கப்பொன் னாரமும்
அக்கு வடங்களும் கொடுத்தார் (7)

............க்கு நிச்சய மாங்குறி
உச்சித மாகவே சொன்னேன்—பட்டுக்
கச்சையும் வெண்முத்துக் குச்சுரு மாலுடன்
கைச்சரமு மெச்சித் தந்தார் (8)

..........வாரும் பச்சை மயில்வடி வேலர்க்கு வரிசை
யாய்ச்செயஞ் சொன்னேன்—விராலி
மலைவா சமுஞ்சொல் லத்தொலை யாத
யோகமுங் கொடுத்தார். (9)

## விருத்தம்

53. மின்னுநவ மணிமுடிசேர் முருகேசர் விராலிகிரி
மீதில் வாழும்
பொன்னணியுந் தனஞ்சிறந்த வஞ்சியரே யொருவசனம்
புகலக் கேளாய்
தன்மையா யவரவர்க்குக் குறியுரைத்து வரிசைபெற்ற
தன்மை போல
மன்னிமையா யெந்தனுக்கு மனமகிழுங் குறிபார்த்து
வழுத்து வாயே.

## மறு—விருத்தம்

54. திருமருக னெனும்வடிவேல் முருகேசர் பரவிசித்தஞ்
செழிக்கு நாட்டில்
வரியுலவும் விழிசிறந்த வாலமோ கினியேநின்
மலர்க்கை பார்த்துப்
புருஷமுடன் குலதெய்வம் வேண்டிக்கொண்டு புதுமை
பொருந்திப் பார்க்க [யாய் குறிமனது
வரிசையுடன் வேணவஸ்த்து வகைகளெல்லாங்
வரச்செய் வாயே. [கொண்டுமிக

## தரு

55. தந்தனத் தான தானென தானென

ஒசத்திக் கத்தூரி யாலே மெழுகடி!
உகந்த சந்தனங் கொண்டுதான்—மிக
உண்மையாய்க் கோல மெழுதடி!

வசதி யாக மலர்ப்பந் தலையிட்டு
வாழைக் கமுகு மாந்தோர ணங்களும்
வரிசை யாகவே கட்டி

குடவயிற்று விநாயகன் பூசைக்குக்
குளிர்ந்த முக்கனி தோசை யிட்லி
கொண்டு வாநல்ல மோதகங்

கடலை சக்கரை யவல்பயரென் னுண்டை
கருத்துட னேவெகு விருப்பமாய்த்—தேங்
காய்கள் பாக்கிலை கொண்டுவா !

சிங்காரமான சொர்ணக் கும்பம் வைத்து
சிறக்க நாழியில் முத்தளந்து—வை !
தீப தூபமுன் காட்டியே

பொங்கமாய் வர்ணச் சேலையொன்று வைத்துப்
புஷ்ப வகைகளைத் தூவியே—மனம்
பொருந்தி வந்தனை செய்யடி

எந்தன் னுகையில் பிரம்புக்கோர் காணிக்கை
யின்ப மாகவே கொண்டுவா—குறி
யெண்ணமாய்ப் பார்த்து சொல்லுறேன்

நன்றாய் வீர வாகுதேவர்
ஆகோர மாகவே வருகிறார்—பூசை
யன்புடன் செய்து கும்பிடு !
கடினமாகக் கருப்பன் வருகிறான்
கருத்துடன் நாளும் விருப்பமாய்—வைத்து
....................வேண்டிக்கோ !

துடினமான ரணவீர பத்திரனைத்
தொழுது பூசையிட் டொருமையாய்
சுக்............கொண்டுவை !

உக்கிர மாமெய்க்க நாச்சியம் மாளுக்கு
உகந்த சாவலுங் கிடாயும்—வெட்டியே
உண்மையாய்ப் பூசை போட்டு

மிக்க வேவளர் கன்னி யெழுவர்க்கும்
விருப்பமாய்ச் பச்சைப் பாளமுப்—பழமும்
விதமுடன் வைத்து வேண்டிக்கோ !

தீர்க்க மாக வளரய்ய னுருக்கு
சிறக்குங் குதிரைக ளெடுத்து—வைத்துநீ
நிறக்கப் பூசனை செய்யடி !

மூர்க்க மாயொரு மங்கிலியக் காரி
முன்னே வந்து தடுக்கிறா—ளொரு
முத்து வர்ணக்கலை கொண்டுவை !

இன்பமாய் எந்தன் வங்கணச் சிங்கனுக்
கேற்ற கொங்கணிக் கச்சைதான்—மிக
எடுத்து வந்தெந்தன் முன்னேவை!

அன்புடனெந்தன் குஞ்சுக்குச் சிக்கெண்ணை
அள்ளி யேமிகக் கொண்டுவா—குறி
யறிந்து சொல்லுறேன் கேளம்மே!

தந்தனத் தான தானென தானென.

## விருத்தம்

56. சதுர்முகனை யோதிவைத்த முருகேசர் விராலிகிரி
தன்னில் வாழும்
அதிரூப மானகுற வஞ்சியரே ஒருவசனம்
அன்பாய்க் கேளாய்
இதவுடன்நீ சொன்னவஸ்த்து வகைகளெல்லாங்
கொண்டுவந்தே னின்பமாகத்
துதிசெய்து குலதெய்வத்தை வேண்டி யெந்தன்
மனக் குறியைச் சொல்லுவாயே.

## வசனம்

ஆகா! வாரும் பெண்ணே! குறமகளே! நீ கொண்டுவரச் சொன்ன வஸ்துக்களெல்லாங் கொண்டுவந்தேன். இனி உங்களுட குல தெய்வங்களை வேண்டிக்கொண்டு என் மனதில் நினைத்திருக்கிற குறியைச் சொல்லும் பெண்ணே!

ஆனால், அப்படியே எங்களுடைய குலதெய்வத்தை வேண்டிக் கொண்டு சொல்லுகிறேன்; கேளிரீயம்மே.

## அகவல்

57. நீருறை கமலம் நிறைந்தபொன் மகளே
சீர்வளர் மதுரைச் செழிக்குமீ னாட்சி
காந்தி மதியெனுங் கருணை கடாட்சி
சேந்தனைப் பெற்ற சிவகாமி யம்மே
அங்கயற் கண்ணி அகிலாண்ட தேவி

இங்கித மாக இலங்குகா மாட்சி
வளர்விசா லாட்சி மகாபூத னாட்சி
யேழ்மையாய் வளரும் எக்கால தேவி
தரணியோர் புகழும் தையல நாயகி
...................கொடுக்கும் மட்டுவார் குழலி
செகதலம் புகழும் செல்லாண்டி யம்மா
அகமகிழ் லட்சுமி ஆயிமா காளி
மாரிமுத் தாய்..............
பேருடன் வளரும் பெரியநா யகியே
வீரமா மலையில் விளங்கும் கன்னியரே
பார்புகழ் மாவைப் பதிவளர் கருப்பா
..............அமரும் அய்யனா ரப்பா
ஊனையூர் தன்னி லுகந்தசாத் தாவே
உள்ளூர் பிடாரி ஓங்கார தேவி
வள்ளிதெய் வானை வடிவேல் முருகா
முள்ளடிக் கருப்பா முருங்கமா முனியே
மன்னியே வளரும் வீரபத் திரனே
ஓங்கி யமர்ந்தோர் ஊரய்ய னாரே
பாங்குடன் வளர்திருப் பாண்டியீஸ் வரரே
பண்புடன் விராலூர்ப் பதியீஸ் பரரே
வண்மைசேர் மாயா வடுகவை ரவனே
சித்திவி னாயகா செல்வக் கணபதி
அத்திமா முகனே ஐந்துகை யோனே
யாவரும் வந்து அன்புடன் கூடித்
தெய்வக் குறத்திநான் செப்பிய வார்த்தை
பழுதுவ ராமலென் பக்கத்தி லிருந்து
வளமிகு செவ் வாலமோ கினியாள்
கருத்தினில் நினைத்த காரியங் கண்டு
வருக்கமாய்ச் சொல்லும் வரந்தரு வீரே.

### வசனம்

இப்படி குலதெய்வத்தை வேண்டிக்கொண்ட குறத்தியுடன்; மோகினி வருகிற விதம்—பராக்கு.

### தரு

58. செண்டுமுலை யிரண்டு மின்ன—தண்டை கலீன்கலீ
வண்டுநிகர் குறவஞ்சிமுன்—மோகினி வந்தாள் [னென்ன

கஞ்சமல ரிலங்குமுந்தன்—கைபார்க்க வாராய்
கனகரத்தினத் தொடிபுனையுங்—கைபார்க்க வாராய்

அன்னமேயுன் னுடையகை—செல்வக் கையே
அழகுமண வாளன்தன்னை—அணைத்துவாழும் நின்கை

சொர்ணநவ ரத்தினங்களும்—சொரிந்தருளும நின்கை
துலங்கிவளர் தெய்வந்தனை—துதித்தருளும் நின்கை

அந்தணர்க்கும் யாசகர்க்கும்—அருளுதவும் நின்கை
அனங்கொடுத்து யாவரையும்—ஆதரிக்கும் நின்கை

செந்தமிழ்சேர் வாணருக்குஞ்—செல்வந்தரு நின்கை
செழித்து வளர்ந்தருளுஞ்—சிறந்திலங்கு நின்கை

வந்தவர்க் கெலாமதிக—வாழ்வுதரு நின்கை
வாஞ்சையுடன் வீணைவைத்து—வாசிக்கும் நின்கை

சிந்தையுடன் கண்வரிசை—செய்தருளும் நின்கை
செகமுழுதும் அதிகசெங்கோல்—செலுத்திவாழும்
நின்கை.

…………உன்னுடைய கையில் நல்லரேகை
கனமான தனரேகை கதித்த செல்வ முண்டா

மின்னும் சங்கரேகை இந்தரேகை நல்ல
சனங்களுனைப் பணிய விளங்கிவாழ்வா யம்மே!

பொங்கமாகப் பின்னும் பத்மரேகை இருப்பதனல்
புவியிலிந்தி ராணிசெல்வம் பொருந்திவரு மம்மே!

இங்கிதம்சேர் மச்சரேகை இருப்ப தனலே
இலங்கு பூஷண வகைகளெல்லாஞ் சேரு மம்மே!

மிக்க தமருக ரேகை விளங்கியிருப் பதனல்
மிகுந்தவித்தை யுன்னிடத்தில் மேன்மையுண்டா மம்மே!

அன்னரேகை உன்கரத்தில் மின்னுவத னலே
அன்னதான மென்நாளு மதிகஞ்செய்வா யம்மே!

தன்மையாய்ப் புத்திரேகை தழைத்திருப்ப தாலே
சகலகலை யறிந்தபுத்ர சம்பத்துண்டா மம்மே!

